विहार करवा लाग्या. ॥

रही छद्मनी तपस्यावाळा हजार पुरुषोनी साथे नीकळेला तपःसंयममा दृढता राखी सौभाग्यनिधिं

इतश्च भगवतो भ्राता रथनेमिः प्रीतिपर एकांते राजीमतीमेवमाह. सुभ्रु ! मा कुरु विषादं ! सर्व

कः को न प्रार्थयति ! भगवान् पुनर्नेमिनाथो वीतरागत्वान्न करोति विषयानुबंधं, ततः प्रतिपद्यस्व मां ? यतोऽहं

कालमहं स्वदाज्ञाकारी भविष्यामि. तया भणितं यद्यहं नेमिनाथेन परित्यक्ता, तथाप्यहं तं न परित्यजामि. स्थितः,

भगवत एव शिष्यणी भविष्यामि ततस्त्वमेनं प्रार्थनानुबंधं त्यज ! ततः स कतिचिद्दिनानि यावन्मौनेन मदनफलपानेन

अन्यस्मिन् दिने पुनरपि तेन सा प्रार्थिता. ततस्तया तत्प्रतिबोधार्थं तत्प्रत्यक्षमेव क्षीरं पीत्वा तया

वांत्वा, तच्च सौवर्णिककच्चोलके क्षिप्त्वा समुपनीतं रथनेमेर्भणितं चेदं पिब ! तेनोक्तं कथं वांतं पिबामि ? पातुमिच्छसि ?

भणितं त्वं किमेतज्जानासि ? स आह बालोऽप्येतज्जानाति. साप्युक्तर्हि नेमिनाथवांतां मां कथं त्वं तिष्ठति. ॥

इदं राजीमत्या वचः श्रुत्वा स उपरतः. राजीमत्यपि दीक्षाभिमुखी तपोविधानैः शरीरं शोषयंती भृकुटी-

अर्थः—आ तरफ भगवान् नेमिना भाइ रथनेमि राजीमतीमां प्रीतिमान् बनी एकांतमां तेणीने बोल्या के—'हे शोभन विषयमां

वाळी ! तुं जराय खेद करयां. तारा जेवी सौभाग्यनिधिनी कोण प्रार्थना न करे ! भगवन् नेमिनाथ तो वीतराग होवाथी बोली के—

न लाग्या तो पछी तुं मने पतिरुपे स्वीकार. हमेशां हुं तारो आज्ञाकारी बनीने रहीश.' आ वचन सांभळी राजीमती छोडी

जो के नेमिनाथे मने त्यजी पण में नेमिनाथने नथी त्यज्या,हुं तो ए भगवान्नी शिष्या बनीने रहीश;माटे तु आ प्रार्थनानो आग्रह मागणी

दे. ते पछी ए रथनेमि केटलाक दिवस तो मूगे मोढे बेसी रह्या पण फरीथी एक दिवस आवीने वळी पाछो पोताने वरवानी

करवा लाग्या त्यारे राजीमतीए तेने प्रतिबोध आपवा माटे तेना देखता दूध पी तेना उपर मींढण घसीने पीधु के तरत वमन थयु, ए वमन करेलु दूध एक कचोळामां भरी रथनेमिनी पासे धरी कयु के–'आ पीओ' त्यारे रथनेमि कहे 'ए वमन करेलु कइ पीवाय?' राजीमती कहे 'आम तमे समजो छो ?' रथनेमि कहे 'ए तो नानो बालके समजे के वमन करेलु न पीवाय एमां शु ? त्यारे राजीमती बोली के–'त्यारे नेमिनाथे वात करेली मने तमे केम पीवा इच्छो छो ? आवु राजीमतीनु वचन सांभळी ते उपशम पाम्यो राजीमती पण दीक्षा लेवानी धारणाथी तपोविधानवडे शरीरनु शोषण करवा लागी. ॥

अत्रांतरे चतुःपञ्चाशद्दिनपर्यंते भगवत श्रीनेमिनाथस्य रैवतगिरिसहस्राम्रवने केवलज्ञानमुत्पन्न. देवैः कृत समवसरणं तत्र समायातासु द्वादशपर्षत्सु देशना कृता ता च श्रुत्वा बहवः प्राणिन प्रव्रजिताः केचिद् गणधरा जाताः, स्थापित भगवता तीर्थं, राजीमत्यपि विविधकन्याभिः सह प्रव्रजिता रथनेमिरपि सविग्नस्तदानीमेव प्रव्रजित . राजीमती तदानीमेवमचिंतयत्, यो मया तदानीं दिव्यपुरुषस्वप्नो दृष्ट सोऽद्य सफलो जातः.

अर्थः—आ अवसरमां चोपनदिवसने अंते भगवान् नेमिनाथने रैवताचलना सहस्राम्रवनमां केवळ ज्ञान उत्पन्न थयु देवोए समवसरण कर्यु त्यांकणे आवेली द्वादश पर्षदने विषये देशना करी, ते सांभळीने घणा प्राणिओ प्रव्रजित थया, केटलाक गणधर थया, भगवाने तीर्थ स्थाप्यु, राजीमती पण विविध कन्याओ सहित प्रव्रजित थयां, रथनेमि पण संवेगपामी तेज वखते प्रव्रजित थयो राजीमतीए ते समये विचार्यु के–'में ते वखते स्वप्नमां दिव्य पुरुष दीठो हतो तेनु फळ मने आजे मळ्यु, ॥

अन्यदा राजीमती साध्वीभि समं भगवतो वंदनार्थं रैवतगिरिं गच्छन्त्यकस्मान्मेघवृष्ट्याऽभ्याहता. सर्वा

अपि साध्व्योऽन्यगुहासु निलीनाः. राजीमत्यप्येकस्यां गुहायां प्रविष्टाऽस्ति, तत्र च पूर्वं रथनेमिसाधुः प्रविष्टो परमंधकारप्रदेशे स्थितोऽयं न दृष्टस्तया. ततस्तया चीवराणि सर्वाण्यप्युत्तारितानि, एवं सा निरावरणा जाता. तस्याः शरीरशोभां दृष्ट्वा, इंद्रियाणां च दुर्दांततयाऽनादिभवाभ्यस्ततया च विषयाभिप्रायेण स परवशो जातः, तादृशो रथनेमिश्च तया दृष्टः. ततो भयभ्रांता सा सद्य आत्मानं प्रावृत्य बाहुभ्यां संगोप्यां च स्थिता. तेन भणिता हे सुतनु ! तावदनुरागवशेनाहमिदं शरीरमरतिपरिगतं भर्तुं न शक्नोमि. ततः कृत्वानुग्रहं प्रतिपद्यस्व मया समं विषयसेवनं ? पश्चात् संजातमनःसमाधी आवां निर्मलं तपः संयमं च चरिष्यावः. तयापि साहसमवलंब्य प्रगल्भवचनैः स भणितः, महाकुलप्रसूतस्य तव किमिदं युक्तं स्वयं प्रतिपन्नस्य व्रतस्य भंजनं ? जीवितमपि सत्पुरुषास्त्यजंति, न पुनर्व्रतलोपं कुर्वन्ति. ततो महाभाग ! मनःसमाधिं कृत्वा चिंतय विषयविपाकदारुणत्वं, शीलखंडनस्य नरकादिकं च फलं ? न च विषयसेवनेन मनःसमाधिः, किं तु भूरितराऽरतिर्भविष्यति. विषयसेवनेन लब्धप्रसरस्य मनसः प्रकाममिच्छा वर्धते उक्तं च—

अर्थः—एक समये राजीमती साध्वीओनी साथे भगवान्‌ने वदन करवा रैवतगिरिपर जइ रह्यां हतां तेटलामां अकस्मात् मेघ वृष्टि थवाथी अकळाइने ए सघळी साध्वीओ पर्वतनी गुफाओमां भराइ गयां, राजीमती पण वासे रही जतां एक गुफामां पेठां. आ गुफामां रथनेमि प्रथमथी पेठेला पण अंधकारने लीधे राजीमतीए दीठो नहिं तेथी एकांत निर्जन स्थान जाणी भींजाइ गयेलां वस्त्रो ऊतारी पोते निरावरण थतां रथनेमिए दीठां. तेणीना शरीरनी शोभा जोइ इन्द्रियोनी स्वछंदता तथा अनादिभवमां अनुभवेल

शासनाथी विषयानुभिलाषवडे परवश थयेल रथनेमि तरफ राजीमतीनी दृष्टि जता भयभ्रांत थइ तेणी पोतानु अग ए भीना वस्त्रोथी ढाकी तेय हाथवती आवृत करी बेसी गया त्यारे रथनेमि बोल्या के-'हे सुतनु ! आ तारे ते अनुरागना आवेशथी वचेनीमा घेरायेला आ मारा शरीरने हु धारी शकतो नथी माटे अनुग्रह करी मारी साथे विषयसेवन करो पछीथी आपणे बेय मन समाधि थता निर्मल तप सयम आचरण करीशु आ टाणे ते राजीमतीए साहसनु अवलबन करी प्रगल्भ वचनोवडे रथनेमिने फटकार्या के-'हे महोटा कुळमां जन्मेला तारा जेवा पुरुषने पोते स्वीकारेला व्रतने आम भागवु ए योग्य छे ? मनने समाहित राखीने विचारो के-विषय सेवननो विपाक (परिणाम) घणोज दारुण=भयकर थाय छे अने शीलखडननु फळ नरकगतिज छे तेम विषयसेवन करवाथी मन समाधि नथी थती, ए तो जेम जेम विषयोने सेवो तेम तेम अरति अधिकाधिक थवानी विषय सेवनथी मनने मार्ग मळता इच्छा वधे छे वळी पण कहु छु के—

भुत्ता दिव्वा भोगा । सुरेसु तह य मणुएसु । न य संजाया तत्ति । अतत्ति एकस्सवि जीअस्स ॥ १ ॥ इत्यादिवाक्यैस्तयाऽनुशासित स सबुद्ध', सम्यगह प्रतिबोधितस्त्वयेति भणन्नात्मान निंदयित्वा, राजीमतीं च भृश स्तुत्वा स गत साधुसभामध्ये, सापि च साध्वीसभामध्ये गतेति अरिष्टनेमिर्भगवान् मरकतसमवर्णो दशधनुरुच्छ्रितदेह शखलाछनस्त्रीणि वर्षशतानि गृहवासे स्थितः, चतु'पचाशद्दिनानि छाद्मस्थ्ये स्थित., चतु - पचाशद्दिनानि सप्तशतवर्षाणि केवलपर्यायेण विहृत्यानेकभव्यान् प्रतिबोध्य च सर्वं वर्षसहस्रायुः परिपाल्य रैवतगिरावाषाढशुद्धाष्टम्यां सिद्धिं गतः क्रमेण रथनेमिराजीमत्यावपि सिद्धिं जग्मतु.. इत्यरिष्टनेमि

चरित्रं सूत्रमग्रे लिख्यते—

अर्थः—देवयोनिमां तथा मनुष्यभवमां दिव्य भोगो भोगव्या पण तृप्ति तो नज थइ. रांक जीवने पण अतृप्तिज रहे. १ इत्यादि वाक्योवडे राजीमतीए रथनेमिने शीखामण आपता प्रबुद्ध थइने ते बोल्या के–तमे मने सम्यक् प्रकारे प्रतिबोधित कर्यो आटलु बोली पोतानी निंदा करतो तथा राजीमतीनी अत्यंत स्तुति करतो ते रथनेमि साधुसभामां गयो अने राजीमती पण साध्वीसभा मध्ये जइ पहोंची. अरिष्टनेमि भगवान् मरकतमणि समान देहकांतिवाळा दशधनुःप्रमाण देहनी उंचाइवाळा तथा शंखलांछन धारण करता त्रणसो वर्ष गृहवासमां स्थित थया, चोपन दिवस पर्यंत छद्मस्थ (लेप वदली छाना) रही विचर्या. चोपन दिवस युक्त सातसो वर्ष केवळ पर्यायथी विहार करी अनेक भव्य जीवोने प्रतिबोध आपीने सकळ सहस्र वर्षनुं आयुष परिपालन करी रैवतगिरिमां आषाढ मासनी शुक्ला अष्टमीदिने सिद्धि पाम्या. क्रमे करी रथनेमि तथा राजीमती पाम्या. आ अरिष्टनेमिनुं संक्षिप्त चरित्र कर्युं. हवे तत्प्रतिपादक सूत्रो आगळ लखाय छे. ॥

मू०—सोरियपुरंमि नयरे। आसि राया महड्ढीए॥ वसुदेवत्ति नामेणं। रायलक्खणसंजुए ॥ १ ॥

व्या०—सौर्यपुरे नाम्नि नगरे वसुदेव इति नाम्ना राजासीत्. यद्यपि सौर्यपुरे समुद्रविजयप्रमुखा दश दशार्हा भ्रातरो विद्यन्ते, तेषु दशसु लघुभ्राता वसुदेवोऽस्ति, तथापि वसुदेवपुत्रो विष्णुर्भूत, तेन वसुदेवस्यैव वर्णनं कृतं कीदृशो वसुदेवः ? महर्द्धिकः, छत्रचामरादिविभूतियुक्तः, पुनः कीदृशः ? राजलक्षणसंयुतः, हस्तपादयोस्तलेषु राज्ञो लक्षणानि चक्रस्वस्तिकांकुशवज्रध्वजच्छत्रचामरादीनि, तैः सहितः, अथवौदार्यधैर्यगांभीर्यादिसहित ॥ १ ॥

अर्थ —सौर्यपुर नगरमा वसुदेव नामे राजा हता. यद्यपि आ सौर्यपुरमा समुद्रविजय वगेरे दश दशार्ह भाइओ हता ते दशेमां नाना भाइ वसुदेव हता तथापि वसुदेवना पुत्र विष्णु थया तेने लीधे वसुदेवनु वर्णन कर्यु केवा वसुदेव ? महर्धिक=छत्रचामरादि महोटी राजविभूतिथी संयुक्त, तथा राजलक्षणसंयुत; अर्थात् हस्ततलमा तथा पादतलमा चक्र, स्वस्तिक, अंकुश, वज्र, ध्वज, छत्र, चामर; इत्यादि चिन्होथी संयुत अथवा औदार्य, शौर्य, धैर्य, गांभीर्य; इत्यादि राजगुणोवडे संयुत हता ॥ १ ॥

मू०—तस्स भज्जा दुवे आसि । रोहिणी देवई तहा ॥ तासि दोह्लपि दो पुत्ता । अइट्ठा रामकेसवा ॥ २ ॥

व्या०—तस्य वसुदेवस्य द्वे भार्ये आस्तां, रोहिणी तथा देवकी यद्यपि वसुदेवस्य द्वासप्ततिसहस्र दारा आसन्, तथाप्यत्रोभयोरेव कार्याद्रोहिणीदेवक्योरेव ग्रहणं कृतं तयो रोहिणीदेवक्योर्द्वयोर्द्वौ पुत्रावभूतां तौ पुत्रौ कौ ? रामकेशवौ कीदृशौ तौ ? अभीष्टौ मातापित्रोरधिकवल्लभौ ॥ २ ॥

अर्थ —ते वसुदेवने बे भार्याओ हती, रोहिणी तथा देवकी जो के वसुदेवने बउतेर हजार स्त्रीओ हती तो पण अहीं बेनुज कार्य होवाथी रोहिणी तथा देवकीनुज ग्रहण करेल छ. ते रोहिणी तथा देवकीने बे पुत्रो हता ते पुत्रो कया ? राम तथा केशव ते केवा ? माता पिताने अभीष्ट अर्थात् अतिप्रिय हता (रोहिणीना बळराम अने देवकीना कृष्ण) ॥ २ ॥

मू०—सोरियपुरंमि नयरे । आसि राया महड्ढिए ॥ समुद्दविजए नाम । रायलक्खणसंजुए ॥ ३ ॥

व्या०—सौर्यपुरे नगरे समुद्रविजयो राजा महर्धिक आसीत्. कीदृशः समुद्रविजयः ? राजलक्षणसंयुक्त अत्र पुनः सौर्यपुराभिधानं समुद्रविजयवसुदेवयोरेकत्रावस्थितिदर्शनार्थं ॥ ३ ॥

अर्थः—सौर्यपुरनगरमां महोटी ऋद्धिवाळो समुद्रविजय नामनो राजा हतो. ते केवो ? राजलक्षणो वडे संयुक्त. अहींपण सौर्यपुर नगरनुं नाम, समुद्रविजय तथा वसुदेव बन्नेनी एकत्र स्थिति दर्शाववा माटे निर्दिष्ट करेलुं छे. ॥ ३ ॥

मू०—तस्स भज्जा सिवानाम । तीय पुत्ते महायसे ॥ भयवं अरिट्ठनेमित्ति । लोगनाहे दमीसरे ॥ ४ ॥

व्या०—तस्य समुद्रविजयस्य राज्ञः शिवानाम्नी भार्यासीत्. तस्याः शिवादेव्याः पुत्रो भगवानैश्वर्यधारी अरिष्टनेमिरासीत्. चतुर्दशस्वप्नदर्शनानन्तरमेकमरिष्टरत्नमयं रथचक्रं सा ददर्श, तेनारिष्टनेमिरिति नाम प्रदत्तं कथंभूतोऽरिष्टनेमिः ? महायशा महाकीर्तिः, पुनः कीदृशोऽरिष्टनेमिः ? लोकनाथश्चतुर्दशरज्जुप्रमाणलोकप्रभुः. पुनः कीदृशोऽरिष्टनेमिः ? दमीश्वरः. कुमारत्वेऽपि येन कदर्पो जितः. तस्माद्दमिनां जितेंद्रियाणामीश्वरो दमीश्वरः. ॥ ४ ॥

अर्थ—ते समुद्रविजय राजानी शिवा नामनी भार्या हती. ते शिवादेवीना पुत्र भगवान् ऐश्वर्यधारी अरिष्टनेमि हता—ए शिवादेवी ए स्वप्नमां चतुर्दश स्वप्न दीठापछी एक अरिष्टरत्नमय रथचक्र तेणीये दीठुं ते उपरथी ए पुत्रने अरिष्टनेमि एवुं नाम धराव्युं. ते अरिष्टनेमि केवा ? महोटा यशवाळा तथा लोकनाथ=चतुर्दशरज्जु प्रमाण लोकना प्रभु अने दमीश्वर=कुमारपणामांज जेणे कंदर्पने जीत्यो तेथी दमी-जितेंद्रियोना इश्वर=दमीश्वर थया.॥ ४ ॥

मू०—सोरिट्ठनेमिनामो उ । लक्खणस्सरसंजुओ ॥ अट्ठसहस्सलक्खणधरो । गोयमो कालगच्छवी ॥ ५ ॥

व्या—अथारिष्टनेमेर्वर्णनमाह—सोऽरिष्टनेमिनामा भगवानष्टसहस्रलक्षणधरो वर्तते, अष्टभिरधिकं सहस्रमष्टसहस्रं, लक्षणानामष्टसहस्रं लक्षणाष्टसहस्रं, तद्धरतीति लक्षणाष्टसहस्रधरः. अष्टसहस्रलक्षणानि धरतीति वाऽष्ट-

सहस्रलक्षणधर पुन कीदृश ? लक्षणस्वरसयुत, लक्षणैः सहित. स्वरो लक्षणस्वरस्तेन सयुत.. स्वरस्यल क्षणानि माधुर्यलावण्याऽव्याहतगाभीर्यादीनि, तै सयुत तीर्थंकरस्य हि अष्टाधिकसहस्रलक्षणानि शरीरे भवति स्वस्तिक वृषभसिंहश्रीवत्सशङ्खचक्रगजाश्वच्छत्राब्धिप्रमुखाणि लक्षणानि हस्तपादादौ भवति. पुन कीदृशोऽरिष्टनेमि ? गौतमो गौतमगोत्रीय, पुन कीदृश. ? कालकच्छविः श्यामकाति ॥ ५ ॥

अर्थ —हवे ए अरिष्टनेमि कुमारनु वर्णन करे छे ते अरिष्टनेमि नामना भगवान् अष्टसहस्रलक्षणधर हता, अर्थात् एक हजारने आठ लक्षणो धारण करनारा हता वळी ते केवा हता ? लक्षण स्वर सयुत=लक्षण सहित स्वरवडे सयुत हता अर्थात् माधुर्य, लावण्य, अव्याहतता, गांभीर्य; इत्यादिक स्वरना जे लक्षणो तेणे करी सयुत हता तीर्थंकरना शरीरमा एक हजारने आठ लक्षणो होय छ, जेवाके-स्वस्तिक, वृषभ, सिंह, श्रीवत्स, शख, चक्र, गज, अश्व, छत्र, समुद्र; इत्यादि लक्षणो हाथ पग वगेरे शरीरावयवोमा होय छ वळी ते अरिष्टनेमि केवा ? गौतम, अर्थात्–गौतमगोत्रीय तथा कालकच्छवि=श्याम देहकातिवाळा हता ॥ ५ ॥

मू०—वज्जरिसहसघयणो । समचउरसो झसोयरो ॥ तस्स राइमईकन्न । भज्जं जायइ केसवो ॥ ६ ॥

व्या०—पुन कीदृश स ? वज्र कीलिका, ऋषभः पट्ट, नाराच उभयपार्श्वयोर्मर्कटबन्ध, एभि सहनन शरीररचना यस्य स वज्रर्षभनाराचसहनन पुन कीदृशः ? समचतुरस्र प्रथमसस्थानवान्, य पद्मासने स्थित सन् चतुर्षु पार्श्वेषु सदृशशरीरप्रमाणो भवति, स, समचतुरस्रसस्थानवानुच्यते. अथ तस्यारिष्टनेमिकुमारस्य केशवः कृष्णो राजीमतीं कन्या भार्यार्थे याचते कृष्णदेवो राजीमत्या जनकपार्श्वे राजीमतीं कन्या नेमिनाथस्य भार्यार्थं

याचते इति भावः ॥ ६ ॥

अर्थः—पुनरपि ते केवा हता ते कहे छे वज्रर्षभनाराचसंहनन=वज्र=कीलिका, ऋषभ=पट्ट अने नाराच=बन्ने पार्श्वमा मर्कट बंध; आवा प्रकारनुं जेनुं संहनन=शरीररचना छे एवा, तथा समचतुरस्र=प्रथम संस्थाननान्=अर्थात् ज्यारे पद्मासने स्थित थाय त्यारें चारे पडखे अदश शरीरप्रमाण जणाय तेवा होय ते समचतुरस्र संस्थानवाळा कहेवाय छे. वळी ते झषोदर, एटले मत्स्यना समान उदरप्रदेशवाळा हाता. आवा ए अरिष्टनेमिकुमारने भार्या अर्थे केशव=कृष्णे राजीमती कन्यानी याचना करी. एटले श्रीकृष्णदेवें राजीमतीना पिता उग्रसेन पासें जइने राजीमती कन्याने नेमिनाथनी भार्या अर्थे याचना करी. ॥ ६ ॥

---

मू०—अह सा रायवरकन्ना । सुसीला चारुपेहिणी ॥ सव्वलक्खणसंपन्ना । विज्जुसोयामणिप्पभा ॥ ७ ॥

व्या०—अथानंतरं सा वरराजकन्या राजीमती कीदृशी वर्तते ? तद्वर्णनमाह—राजसु वरो राजवरः षोडशसहस्रमुकुटबद्धभूपेषु श्रेष्ठ उग्रसेनो राजा, तस्य कन्या पुत्री राजवरकन्या. सा कीदृशी ? सुशीला शोभनाचारा, पुनः कीदृशी ? चारुप्रेक्षणी, चारु प्रेक्षणमवलोकनं यस्याः सा चारुप्रेक्षणी सुंदरावलोकना, सुंदरनयना वा. पुनः कीदृशी ? सर्वलक्षणसंपन्ना, चतुःषष्टि कामिनीकलाकोविदा. पुनः कीदृशी ? विद्युत्सौदामिनीप्रभा, विशेषेण द्योतते इति विद्युत्, सा चासौ सौदामिनी च विद्युत्सौदामिनी, तद्वत्प्रभा यस्याः सा विद्युत्सौदामिनीप्रभा, स्फुरद्विद्युत्कांतिः ॥७॥

अर्थः—अथ=तदनंतर ते राजकन्या राजीमति केवी छे, तेनुं वर्णन करेछे—राजाओमां श्रेष्ठ=सोळ हजार मुकुटबद्ध राजाओमां श्रेष्ठ= उग्रसेन राजानी कन्या. वळीते केवी ? सुशीला= शोभन आचारवाळी तथा चारुप्रेक्षणी, अर्थात् सुंदरनेत्रवाळी तेमज सर्वलक्षणसंपन्ना=

चोसठ कामिनी कळामां निपुणा अने विद्युत्सौदामिनीप्रभा, एटले विशेपरीतें चमकती वीजळीनाजेवी जेनी देहकांति छे एवी ॥७॥

मू०—अहाह जणओ तीसे । वासुदेव महड्ढिय ॥ इहागच्छउ कुमारो । जा से कण्ण दलामह ॥ ८ ॥

व्या०—अथ कृष्णेन नेमिकुमारार्थं कन्याया याचनानंतर तस्या राजीमत्या जनको महर्द्धिक वासुदेव कृष्ण-माह, हे वासुदेव ! कुमारोऽरिष्टनेमिरिहास्मद्गृहे आगच्छतु, 'जा' इति येन कारणेन 'से' इति तस्मै अरिष्टनेमि कुमाराय तां राजीमतीं कन्यामह ददामि आमन्त्रक्रोष्टुकिनैमित्तिकादिष्टे लग्ने विवाहविधिनोपढौकयामि. ॥८॥

अर्थ —ज्यारे कृष्णे नेमिकुमारने माटे कन्यानु मागु कर्यु ते पछी ते राजीमतीना जनक=पिता उग्रसेने महोटी ऋद्धिवाळा श्रीकृष्णने कह्यु के-'हे वासुदेव ! ए अरिष्टनेमिकुमार अमारे घरे आवे एटले ते अरिष्टनेमिकुमारने ते राजीमती कन्या हु आपु. पासे बेठेला नैमित्तिक=ज्योतिर्विद् क्रोष्टुकिए निश्चित करी आपेल लग्न समये हु विवाहविधिथी मारी कन्या तेने अर्पण करु ॥८॥

मू०—स चोसहीहिं ण्हविओ । कयकोउअमंगलो ॥ दिव्वजुअल परिहिओ । आभरणेहिंविभूसिओ ॥ ९ ॥

व्या०—अथारिष्टनेमिकुमारः क्रोष्टुकर्यर्पितलग्ने सर्वाभिरौषधीभि, जयाविजयाशल्यविशल्याऋद्धिवृ ध्द्यादिभि स्नपित, पुन कृतकौतुकमंगलः, पुन० कीदृश ? परिधृतदिव्ययुगल, परिहित दिव्य विवाहप्रस्ता वार्हवस्त्रयुगल येन स परिहितदिव्ययुगल, प्राकृतत्वाच्छन्दविपर्यय पुन० कीदृशः ? आभरणैः कुंडलमुकुट-हारादिभिर्विभूपितोऽलकृत. ॥ ९ ॥

अर्थः—पछी ए अरिष्टनेमिकुमारने क्रोष्टुकिए आपेला लग्ने सर्वोषधि=जया विजया शल्यविशल्या ऋद्धि वृद्धि आदिक औषधि=

वडे नवरावीने तेमज कौतुकमंगळ=रक्षंबंधनादिक करीने, तथा दिव्यवस्त्रयुगल पहेरावीने तेने विवाहोचित कुंडळ, मुकुट, हार, कडां, वगेरे आभूषणोथी शणगारीये, ॥ ९ ॥

मू०—मत्तं च गंधहत्थिं च । वासुदेवस्स जिट्ठगं । आरूढो सोहई अहियं । सिरे चूडामणि जहा ॥ १० ॥

व्या०—च पुनररिष्टनेमिकुमारो वासुदेवस्य ज्येष्ठकं मत्तं गंधहस्तिनमारूढोऽधिकं शोभते. क इव ? शिरसि मस्तके चूडामणिरिव, यथा मस्तके मुकुटः शोभते, तथा नेमिः सर्वेषां यादवानां मध्ये चूडामणिसदृशो विराजते.

अर्थः—पछी ए अरिष्टनेमिकुमार, वासुदेवना ज्येष्टक=महोटामत्तगंधहस्ती उपर आरुढ थइ जेम मस्तक उपर मुकुट शोभे तेम शोभशे, सर्वयादवोना मध्ये चूडामणि समान दीपी नीकळशे. ॥ १० ॥

मू०—अह उसिएण छत्तेण । चामराहियसोहिओ ॥ दसारचक्केण य सो । सव्वओ परिवारिओ ॥ ११ ॥

मू०—चउरंगिणीए सेणाए । रइयाए जहक्कमं ॥ तुडीयाण सन्निनाएण । दिव्वेणं गयणं फुसा ॥ १२ ॥

मू०—एयारिसीए इड्ढीए । जुत्तिए उत्तमाइय ॥ नियगाओ भवणाओ । णिज्जाओ वण्हिपुङ्गवो ॥ १३ ॥

तिसृभिः कुलकं ॥ व्या०—अथानंतरं वृष्णिपुङ्गवो नेमिकुमारो निजकात्स्वकीयगृहादेतादृश्या समीपतरवर्तिन्या ऋध्ध्या, पुनरुत्तमया प्रधानया द्युत्या दीप्त्या पाणिग्रहणाय निर्गतः, उग्रसेनगृहंप्रति स्वमंदिरान्निःसृत इत्यर्थः, कीदृश्या ऋध्ध्या ? तां ऋद्धिपद्धतिमाह-स नेमिकुमार उच्छ्रितेनोच्चैः कृतेन छत्रेण मेघाडंबरछत्रेण, च पुनश्चामराभ्यपार्श्वयोर्वीज्यमानः शोभितः, पुनः स नेमिकुमारो दशार्हचक्रेण यादवसमूहेन सर्वतः परिवृतः. ॥ ११ ॥

पुन कीदृश ? चतुरंगिण्या सेनया परिवृत , पुनः कीदृश ? त्रुटिताना तूर्याणा भेरिमृदगपटहकरतलतालादीना दिव्येन देवयोग्येन सन्निनादेन सम्यक्शब्दन सहित कीदृशेन तूर्याणा निनादेन ? गगनस्पृशा, गगन स्पृशतीति गगनस्पृक्, तेनाकाशव्यापिना ॥ १३ ॥

अर्थ —त्रण गाथाओनु कुलक=एटले एक वाक्य छे तदनतर वृष्णिपुगव=वृष्णिकुलमा श्रेष्ठ=नेमिकुमार पोताना भुवनथी आवी=वर्णवाशे तेवी=ऋद्धिथी तथा उत्तम दीप्तिथी पाणिग्रहण करवा नीकल्या, उग्रसेनना घर प्रति जवा माटे पोताने घरेथी नीकल्या केवी ऋद्धि ? ते ऋद्धिनी पद्धतिनु वर्णन आपेछे=उच्छ्रित=उपर धरेल छत्र=मेघाडबर छत्र सहित, तथा बेय पडखे वे चमारो वडे व्यजन करावाथी शोभता, वळी दशार्हचक्र=यादव समुदाये सर्वत परिवारित, तथा क्रमप्रमाणे रचेली=गोठवेली चतुरंगिणी सेनाये परिवृत, ते साथे तूर्य=विविधवाद्योना गगनस्पर्शी=आकाशव्यापी सनिनाद=मनोहर नाद थता आवे (एवी ऋद्धिथी परणवानीकल्या ) ॥ ११-१२-१३ ॥

---

मू०—अह सो तत्थ निज्जते । दिस्स पाणे भयदुदुए ॥ वाडेहिं पजरहिं च । सनिरुद्ध सुदुक्खिए ॥ १४ ॥

मू०—जीवियत तु सपत्ते । मसट्ठा भक्खियव्वए ॥ पासित्ता से महापन्ने । सारहिं इणमब्बवी ॥ १५ ॥

युग्म ॥ व्या०—अथानतर स नेमिकुमार सारथिमिदमब्रवीत्, कि कृत्वा ? तत्र विवाहमडपासन्ने निर्यन्नधि गच्छन् भयद्रुतान् भयव्याकुलान् प्राणान् जीवान् स्थलचरान् मृगश शकशुकरतित्तिरलावकादीन् मासार्थं भक्षितव्यान् 'पासित्ता' इति विचार्य दृष्ट्वा तादृशान् हृदि निधाय, कथभूतान् प्राणान् ? वाटकैर्भित्तिभि कटकवाटि

पंजरैर्लोहवंशशलाकादिविनिर्मितैः पक्षिनियंत्रणस्थानैः संस्थानैः
कादिभिर्वा निरुद्धानतिशयेन यंत्रितान्, पुनः कीदृशान्? जीवितांतं संप्राप्तान्. ते प्राणिन एवं जानंत्यस्माकं मरणमा-
संनिरुद्धान्, अत एव सुदुःखितान्, पुनः कीदृशो नेमिकुमारः? महाप्राज्ञो महाबुद्धिसहितः, अर्थाद्
गतं, कुतोऽस्माकं जीवितमिति मरणदशां संप्राप्तान्. कीदृशो नेमिकुमारः? महाप्राज्ञो महाबुद्धिसहितः,
ज्ञानत्रयेण विस्तीर्णबुद्धिरित्यर्थः. ॥ १५ ॥

बे गाथानो संबंध भेळो छे. अर्थः—अथ=ते पछी ते नेमिकुमार सारथिने आम बोल्या. केम करीने? त्यां विवाहमंडप पांसे
पहोंच्या ते वख्ते भयथी व्याकुळ प्राणीओ=मृग, शशलां सूकर, तित्तिरि, लावक आदिक स्थल चारी तथा पक्षीओ=ने मांस भक्षा-
णार्थ वाडामां तथा पांजराओमां निरुद्ध=पूरेला अने तेथीज अतिदुःखित थतां, जीवितांतने संप्राप्त=अर्थात् मुनाजेवां थइ गयेलां
जोइने ए महाप्राज्ञ=ज्ञानत्रयथी विस्तीर्णबुद्धिमान् नेमिकुमारे सारथिने पुछ्युं. ॥ १४–१५ ॥

मू०—कस्स अट्ठा इमे पाणा। एते सव्वे सुहेसिणो ॥ वाडेहिं पंजरेहिं च। संनिरुद्धा य अच्छिहिं ॥ १६ ॥

व्या—सारथिं किमब्रवीदित्याह—हे सारथे! इमे प्रत्यक्ष दृश्यमानाः सर्वे प्राणा वाटकैश्च पुनः पंजरैः संनि-
रुद्धा अत्तंयं नियंत्रिताः कस्यार्थं कस्य हेतोः? 'अच्छिहिं' इति तिष्ठंति. कीदृशा इमे प्राणाः? सुखार्थिनः, सर्वे संसा-
रिणो जीवाः सुखार्थिनः संति, किमर्थं दुःखिनः क्रियते? भगवान् जानन्नपि जीवदयाप्रकटीकरणार्थं सारथिं पप्र-
च्छेति भावः. ॥ १६ ॥

अर्थः—सारथिने शुं कह्युं? ते कहे छे–हे सारथे! आ प्रत्यक्ष देखाता प्राणियो जे वाडाओमां तथा पांजराओमां संनिरुद्ध=

रूंधेला=पूरेला जे त केने माटे ? शा हेतुथी एम रहेला छे ? आ प्राणी कया छे ? सुखार्थी, ससारमा सर्वे प्राणी सुखना अर्थीज होय
छे तो पछी आ प्राणी शा माटे दु खी कराय छे ? भगवन् पोते जाणे छे तथापि जीवदया प्रकट करवा सारथिने पूछे छे ॥ १६ ॥

मू०—अह सारही तओ भणइ । एए भद्दा उ पाणिणो ॥तुज्झ विवाहकज्जमि । भोयावेउ बहु जण ॥ १७ ॥

व्या—अथ नेमिकुमारवाक्यश्रवणानतर तत सारथिर्भणति, हे स्वामिन्नेते भद्रा प्राणिनो युष्माक विवाह
कार्यं बहुजनान् यादवलोकान् भोजयितुमेकत्र मेलिता सति ॥ १७ ॥

अर्थ —अथ=नेमिकुमारनु वाक्य साभळीने तदनतर सारथि बोल्यो के-हे स्वामिन् ! आ बिचारा भोळा प्राणियो आपना विवा
हकार्यमा घणाकजनो-यादवलोकोने भोजन कराववा माटे अहीं एकत्र मेळाकरी राखेला छ ॥ १७ ॥

मू०—सोऊण तस्स वयण । बहुपाणिविणासण ॥ चिंतेइ से महापन्ने । साणुक्कोसे जिए हिओ ॥ १८ ॥

व्या०—से इति स नेमिकुमारस्तस्य सारथेर्वचन श्रुत्वा चिंतयति कीदृश स ? महाप्राज्ञो महाबुद्धिमान्,
पुन. कीदृश स ? जीवे हितो जीवविषये हितेप्सु पुन कीदृश ? सानुक्कोश', सह अनुक्कोशेन वर्तते इति सानु-
क्कोश सदय, अथवा जीवे हि निश्चयेन सानुक्कोश सकरुण, तु शब्द पादपूरणे कीदृश सारथेर्वचन ? बहुप्रा-
णिविनाशन बहुजीवाना विघातकारक ॥ १८ ॥

अर्थ —ते नेमिकुमार त सारथिनु वचन साभळीने चिंतामा पडया ते केवा ? महाप्राज्ञ=महाबुद्धिमान् तथा जीवोना हितकर
अने सानुक्कोश=दयाळु अथवा हि=निश्चये जीवने विषये सानुक्कोश=सदय 'तु' शब्द पादपूरणार्थ गणाय सारथिनु वचन केवु ?

बहुप्राणिविनाशन=घणां प्राणिओनुं घातकारक. ॥ १८ ॥

मू०—जइ मज्झकारणा एए । हन्नंते सुवहुजिया ॥ न मे एयं तु निस्सेयं । परलोए भविस्सइ ॥ १९ ॥

व्या०—तदा नेमिकुमारः किं चिंतयतीत्याह-यदि मम विवाहादिकारणेनैते सुवहवः प्रचुरा जीवा हनिष्यंते

मारयिष्यंते, तदेतद्धिंसाकर्म कर्म परलोके परभवे निःश्रेयसं कल्याणकारि न भविष्यति परलोकभीरुत्वस्यात्यंत-

मभ्यस्ततया जिनानां, अन्यथा भगवतश्चरमदेहत्वादतिशयज्ञानत्वाच्च कुत एवंविधा चिंतेति भावः. ॥ १९ ॥

अर्थः-त्यार नेमिकुमारे शुं विचार्युं ते कहे छे-जो मारा विवाहने कारणे आ बहु=पुष्कळ जीवो हणायछे=मरायछे तो आ हिंसात्मक

कर्म मने परलोकना=परभवे निःश्रेयस=कल्याणकारक थशे नहि. अत्यंत अभ्यस्त होवाथी पोतानी परलोकथी भीरुता कही नाखी.

अन्यथा भगवानुनो आ छेल्लो देह होवाथी तथा अतिशय ज्ञान होवाथी आवा प्रकारनी चिंता होयज क्यांथी? एवो भावार्थ छे. ॥१९॥

मू०—सो कुंडलाण जुयलं । सुत्तगं च महाजसो ॥ आभरणाणि य सव्वाणि । सारहिस्स पणामए ॥ २० ॥

व्या०—स नेमिकुमारो महायशाः, नेमिनाथस्याभिप्रायात् सर्वेषु जीवेषु बंधनेभ्यो मुक्तेषु सत्सु सर्वाण्याभर-

णानि सारथये प्रणामयति ददाति. कानि तान्याभरणानि? कुंडलानां युगलं, पुनः सूत्रकं कटीदवरकं, चकारादा-

भरणशब्देन हारादीनि सर्वांगोपांगभूषणानि सारथेर्ददौ. ॥ २० ॥

अर्थ—महायशाः महोटा यशवाळा ते नेमिकुमारे-ज्यारे नेमिनाथनो अभिप्राय जाणी बधां प्राणियो बंधनथी छोडी मूक्यां

त्यारे=कुंडळनुं युगळ जोडी, सूत्रक=कंदोरो, 'च' शब्द उपरथी बीजां कडां बाजुबंध हार वगेरे सर्व अंग उपांगना आभारणो उतारीने

सारथिने अर्प्यां-प्रीतिदान=इनाम तरीके आपी दीधां ॥ २० ॥

मू०—मणपरिणामे य कए । देवा य जहोइयं समोइण्णा ॥ सव्वड्ढीए सपरिसा । निक्खमण तस्स काउ जे ॥२१॥

व्या—तस्मिन्नेमिकुमारे मन परिणामे चित्ताभिप्राये दीक्षा प्रतिकृते सति, लोकांतिकदेववचनात्सांवत्सरिकदाने दत्ते सति, देवाश्चतुर्विधा यथोचित यथायोग्य सर्वर्द्ध्या समवतीर्णास्तत्रागता: किं कर्तुं ? तस्य भगवतो नेमिकुमारस्य नि:क्रमणमहोत्सव दीक्षामहिमान कर्तुं जेशब्द पादपूरणे. कीदृशा देवा ? सपरिषद , सह तिसृभि परिषद्भिर्वर्तंते इति सपरिषद' परीषत्सहिता इत्यर्थ ॥ २१ ॥

अर्थ —ते नेमिकुमारे पोतानो मन: परिणाम=चित्तनो अभिप्राय=दीक्षा प्रति कर्यो त्यारे, एटले लोकांतिक देवोना वचनथी सांवत्सरिक दान दवाया त समयेचतुर्विध देवो, यथोचित रीत ते भगवान् नेमिकुमारनो निष्क्रमण महोत्सव=एटले-दीक्षानो महिमा-करवा माट त्रणे परिषद सहित तथा सर्व प्रकारनी ऋद्धि सहित समवतीर्ण थया=स्वर्गथी उतर्या ॥ २१ ॥

मू०—देवमणुस्सपरिवुडो। सिवियारयणं तओ समारूढो॥ निक्खमिय बारगाओ। रेवययमि ठिओ भगवं ॥२२॥

व्या०—ततोऽनतर नेमिकुमारो भगवान् ज्ञानवान् दीक्षावसरज्ञो देवैर्मनुष्यै परिवृतो देवमनुष्यपरिवृत्त' शिबिकारत्नमुत्तरकुरुनामक समारूढो द्वारिकापुरितो नि:क्रम्य नि:सृत्य रेवते रैवताचले स्थित ॥ २२ ॥

अर्थ.—तदनतर नेमिकुमार भगवान् दीक्षानो अवसर जाणी देव मनुष्योथी परिवारित थइ शिबिकारत्न=उत्तरकुरु नामनी पालखी उपर आरूढथइने द्वारिकापुरिमांथी नीकळीने रैवतक पर्वतने विषये जइने स्थित थया ॥ २२ ॥

सू०—उज्जाणे सपत्तो । उइण्णो उत्तमाओ सिवियाओ ॥ साहस्सीए परिवुडो । अह निक्खमई हिं चित्ताहिं ॥२३॥

व्या०—तत्र रेवताचले उद्याने सहस्राम्रनाम्नि वने संप्राप्तः, पुनरुत्तमायाः प्रधानायाः शिविकाया उत्तीर्णः, सहस्रेण परिवृतः प्रधानपुरुषसहस्रेण संयुतः सन्, अथ चित्रायां चित्रानक्षत्रे निःक्रामति, दीक्षा गृह्णाति, पंचमहाव्रतोच्चारण करोति. ॥ २३ ॥

अर्थः—त्यां रैवताचलमा सहस्राम्र नामना उद्यानमां उत्तम शिविकामाथी उतर्या अने सहस्रप्रधान पुरुषोथी परिवारित थइ चित्रानक्षत्रमा निष्क्रम्या. दीक्षा ग्रहण करी. अर्थात् पच महाव्रतोनु उच्चारण कर्युं. ॥ २३ ॥

सू०—अह सो सुगंधगंधिए । तुरियं मउयकुंचिए ॥ सयमेव लुचई केसे । पंचमुट्ठीहिं समाहिए ॥ २४ ।

व्या०—अथ पचमहाव्रतोच्चारणानतर स नेमिनाथः स्वयमेवात्मनैव त्वरित केशान् पचमुष्टिभिः कृत्वा लुंचते कीदृशः सन्? समाहितो ज्ञानदर्शनचारित्ररूपसमाधियुक्तः सन्. कीदृशान् केशान्? सुगंधगंधिकान् स्वभावतः सुरभिगंधान्. पुनः कीदृशान्? मृदुकुकुंचितान्, मृदुकाश्च ते कुंचिताश्च मृदुककुंचितास्तान् सुकुमालान् अकुटिलान्. ॥ २४ ॥

अर्थः—अथ-पचमहाव्रतोच्चारण थया पछी ते नेमिनथे पोतेज तुरतज पोतना सुगंधयुत तथा मृदु अने कुंचित अर्थात् कोमळ अने सरल केशने, समाहित थइने-ज्ञानदर्शन चारित्ररूप समाधि युक्त रहीने पाच मुष्टिवडे करीने लुंचित कर्या=केशलोच कर्यो, ।२४।

सू०—वासुदेवो य तं भणइ । लुत्तकेसं जिइंदियं ॥ इच्छियमणोरहे तुरियं । पावेसू तं दमीसर ॥ २५ ॥

व्या—तदा वासुदेव कृष्ण , चकारात् समुद्रविजयादिनृपगणोऽपि त नेमिनाथ जितेंद्रिय, पुनर्लुप्तकेश कृत लोचमिति वचन भणति, इत्याशीर्वादमस्य ददाति भो दमीश्वर ! दमिना जितेंद्रियाणामीश्वरो दमीश्वर , तत्स बोधन हे दमीश्वर ! यतीश्वर ! ईप्सित वाछित मनोरथ त्वरित शीघ्र, तमिति त्व प्राप्नुहि ! ॥ २५ ॥

अर्थ —ते समये लुप्तकेश=जेणे केशलोच करेलछे एवा तथा जितेंद्रिय एवा नेमिनाथने वासुदेव कहु के-हे दमीश्वर=यतीश्वर ! ईप्सित=मनोवाछित मनोरथने तमे त्वरित=शीघ्र प्राप्त थाओ ( वासुदेव आवो आशीर्वाद आप्यो ) ॥ २५ ॥

---

मू०—नाणेण दसणेण च । चरित्तेण तहेव य ॥ खतीए मुत्तीए चेव । वड्ढमाणो भवाहि य ॥ २६ ॥

व्या—पुनराशीर्वचनमाह-पुनर्हे स्वामिस्त्व ज्ञानेन दर्शनेन तथैव चारित्रेण, च पुन क्षात्या, क्षमया च पुन मुक्त्या निर्लोभत्वेन वर्धमानो ' भवाहि ' इति भव ! ॥ २६ ॥

अर्थ —पुनरपि आशीर्वचन कहे छे-हे स्वामिन् ! तमे ज्ञाने करी, दर्शने करी तथा चारित्रे करीने अने क्षाति=क्षमावडे तथा मुक्ति=निर्लोभताए करी वर्धमान थाओ ॥ २६ ॥

---

मू०—एव ते रामकेसवा । दसारा य बहूजणा ॥ अरिट्ठनेमिं वदित्ता । अइगया बारगापुरिं ॥ २७ ॥

व्या—एवममुना प्रकारेण रामकेशवौ, च पुनर्दशापि दशार्हा , च पुनर्बहवोऽन्ये जनाश्चत्वारो वर्णा अरिष्टनेमिं स्वामिन वदित्वा स्तुत्वा नत्वा च द्वारिकापुरीमतिगता प्रविष्टा. ॥ २७ ॥

अर्थ —ए प्रकारे राम केशव तथा दशे दशार्ह अने अन्य बहुजनो चारे वर्णना लोको अरिष्टनेमि स्वामीने वदन करी=स्तुति

नमस्कार करी द्वारिकापुरीमां प्रविष्ट थया. ॥ २७ ॥

मू०—सोऊण रायकन्ना । पव्वज्जं सा जिणस्स उ ॥ नीहासा य निराणंदा । सोगेण य समुच्छया ॥ २८ ॥

व्या—सा राजवरकन्योग्रसेननृपपुत्री राजीमती शोकेन समुच्छया समवस्तृताऽवष्टब्धा व्याप्ताभूदित्यर्थः किं कृत्वा ? जिनस्य नेमिनाथस्य प्रव्रज्यां दीक्षां श्रुत्वा. कथंभूता सा ? निर्हासा निर्गतो हासो यस्याः सा निर्हासा हास्यरहिता. पुनः कीदृशा सा ? निरानंदा आनंद रहिता. ॥ २८ ॥

अर्थः—ते राजवर कन्या उग्रसेननृपनी पुत्री राजीमती शोके करीने अवष्टब्ध=व्याप्त थइ गइ. केम करीने ? जिन=नेमिनाथनी प्रव्रज्या=दीक्षा सांभळीने. ते राजीमती केवी ? निर्हासा=हास्यरहित तथा निरानंदा=आनंदविनानी. ॥ २८ ॥

मू०—राईमईविचिंतेइ । धिगत्थु मम जीवियं ॥ जाहं तेणं परिच्चत्ता । सेयं पव्वइउं मम ॥ २९ ॥

व्य—सा राजीमती मनसि विचिंतयति, मम जीवितंधिगस्तु. याहं तेन नेमिनाथेन परित्यक्ता, अतो मम प्रव्रजितुं दीक्षां गृहीतुं श्रेयः, न तु गृहे स्थातुं श्रेय इति भावः. ॥ २९ ॥

अर्थः—ते राजीमती मनमां चिंतवन करवा लागी के–मारा जीवितने धिक्कार हो; जे हुं नेमिनाथें त्यजाणी. हवे तो मारे प्रव्रज्या=दीक्षा=गृहण करवी एज श्रेयछे घरमां बेसी रहेवुं ए श्रेय नथी. ॥ २९ ॥

मू०—अह सा भमरसन्निभे। कुचफणगपसाहिए ॥ सयमेव लुंचई केसे । धिइमंता ववस्सिया ॥ ३० ॥

व्या—अथानंतरं सा राजीमती स्वयमेव केशान् लुंचति. कथंभूता सा ? धृतिमती धैर्ययुक्ता, पुनः कथंभूता ?

व्यवसिता निश्चला, धर्मं कर्तुं स्थिरा कीदृशान् केशान्? 'कुचफणगपसाहिए' कूर्चफनकप्रसाधितान् कूर्चो गूढकेशोन्मोचको वंशशलाकारचित केशसंस्करणोपकरणविशेष, फनको गजदंतकाष्टमय कंकतक, कूर्चश्च फनकश्च कूर्चफनकौ, ताभ्या प्रसाधिता संस्कृता कूर्चफनकप्रसाधितास्तान् पुनः कीदृशान्? भ्रमरसन्निभान भ्रमरवच्छ्यामान् ॥ ३० ॥

अर्थ —अथ=अनतर ते राजीमति पोताना केशनु पोताने हाथेज लुचन करवा लागी राजीमती केवी? धृति=धैर्यवाली तथा व्यवसिता=धर्मकरवामां निश्चला केवा केश? कूर्च फनक प्रसाधित, एटले कूर्चं=वासनी सणीयोनो बनावेलो वाळ समारवानो ब्रश तथा फणक एटले हाथीदातनो दातीयो; ए बन्ने वडे सुधारेला अने भ्रमर संनिभ एटले भमराजेवा काळा ( एवा वाळनो पोतेज लोच कर्यो ) ॥ ३० ॥

---

मू०—वासुदेवो य त भणई। लुत्तकेस जिइंदिय ॥ ससारसागर घोर। तर कन्ने लहु लहु ॥ ३१ ॥

व्या०—च पुनस्तदा वासुदेवः श्रीकृष्णस्तां राजीमतीं कन्यां भणति, आशीर्वाद पठति, हे कन्ये! हे राजीमति! घोर रौद्र ससारसमुद्र लघु लघु त्वरित त्वरित तर? ससारसमुद्रस्य पार कुरु? लघु लघु इति सभ्रमे आदरे द्विर्वचन, कीदृशीं राजीमतीं? लुप्तकेशा कृतलोचा, पुन' कीदृशीं? जितेन्द्रिया साध्वीमित्यर्थ, ॥ ३१ ॥

अर्थः—पुनरपि वासुदेव, लुप्तकेशा तथा जितेंद्रिया ते राजीमतीने कहे छे के—हे कन्ये राजीमति! घोरे=भयकर आ ससार समुद्रने लघु लघु=झट झट तरीजाओ, ससार सागरनापारने पामो. 'लघु लघु' ए सभ्रममा अथवा आदरार्थमा बे वार कह्यु, ते राजी-

मती केवी ? जेना केशनो लोच थइ गयेल छे तेवी तथा जीतेलछे इंद्रियोने जेणे एवी ते साध्वी राजीमाती. ॥ ३१ ॥

मू०—सा पव्वइया संती । पव्वावेसी तहिं बहु ॥ सयणं परियणं चेव । सीलवता बहुस्सुया ॥ ३२ ॥

व्य०—सा राजीमती प्रव्रजिता सती गृहीतदीक्षा सती, तत्र द्वारिकायां बहून् स्वज्ञातीन् स्त्रीजनान्, च पुनः परिजनान् दास्यादिस्त्रीजनान् प्राव्राजयत् स्वसार्थेऽपरानपि दारान् प्रव्राजयामासेत्यर्थः. कीदृशी सा ? शीलवती, पुनः कीदृशी ? बहुश्रुता प्रचुरकृतज्ञानाभ्यासा. ॥ ३२ ॥

अर्थः—ते प्रव्रजिता=दीक्षा जेणे गृहण करी छे एवी तथा शीलवती अने बहुश्रुता, अर्थात् जेणे पुष्कळ ज्ञानाभ्यास करेलो छे एवी राजीमतीए त्या द्वारिकामां पोताना स्वजननी स्त्रीयोने तेमज परिजन=दासी वगेरे स्त्रीजनोने घणीओने प्रव्रज्या=दीक्षा लेवरावी. ( पोतानी साथे साध्वी स्त्रीओनो पण समुदाय कर्यो. ) ॥ ३२ ॥

मू०—गिरिं रेवइयं जंती । वासेणुल्ला उ अंतरा ॥ वासंते अंधयारंमि । अंते लयणस्स सा ठिया ॥ ३३ ॥

व्या—सा राजीमत्येकदा स्वामिवंदनार्थं रैवतकं गिरिं गिरनारपर्वतं यांती लयनस्य गिरिगुहागृहस्यांतर्मध्ये स्थिता. क सति ? वर्षति मेघेंधकारे सति, मेघान्धकारेण दृक्प्रचारे निरुद्धे सति. कीदृशी सा ? अंतरा अर्धमार्गे वर्षेणेति वर्षाभिरुल्लाऽऽर्द्रा क्लिन्नसर्वचीवरा. ॥ ३३ ॥

अर्थः—एक समये ते राजीमती स्वामिवंदनार्थं रैवतकगिरि=गिरनार पर्वत उपर जती हती त्यां वचमां वर्षा थतां जळथी सर्व चीवर=वस्त्र उल्ल=भींजाइगयां अने मेघना अंधकारनडे दृष्टिप्रचार निरुद्ध थना लाग्यो तेथी एक लयन पर्वतनी गुफाना अंदर स्थित थइ.

मू०—चीवराणि विसारती । जहाजाइत्ति पासिया ॥ रहनेमी भग्गचित्तो । पच्छा दिठ्ठो तीइवि ॥ ३४ ॥

व्या०—रथनेमिर्भग्नचित्तोऽभूत्, संयमाच्चलितमना अभूत् किं कृत्वा ? चीवराणि साद्राणि शरीरादुत्तार्य विस्तारयंती यथाजातामित्येवरूपा निर्वस्त्रा तां राजीमतीं दृष्ट्वा, तया राजीमत्यापि स रथनेमिश्चलचित्तः पश्चात् दृष्ट पूर्वमंधकारे सति न दृष्टः अन्यथा यदि पूर्वं दृष्टोऽभविष्यत्, तदैकाकिनी तत्र न प्राविक्षदिति भाव ॥ ३४ ॥

अर्थ—(गुफामा जइ निर्जन स्थान जाणी) ते राजीमती चीवर=भीनावस्त्रो उतारी यथाजाता=नग्न मटाणे होय तेवी=निर्वस्त्रावस्थ तेने जोइने-प्रथमथी ते गुफामा पेठेलो रथनेमि भग्नचित्त अर्थात् संयमथी चलितथयो, तेवोज ए रथनेमि राजीमतीए दीठो प्रथम अंधकारमा नहोतो दीठो जो प्रथम दीठो होत तो राजीमती एकली त्या पेसतज नहिं ॥ ३४ ॥

---

मू०—भीया य सा तहिं दट्ठु । एगंते संजयं तयं ॥ बाहाहिं काउ संगोफं । वेवमाणी निसीयई ॥ ३५ ॥

व्या०—सा राजीमती स्वयं तदैकांते गुहाया रथनेमिं संयतं साधु दृष्ट्वा भीता, कदाचिदयमयं मम शीलभंगं कुर्यादिति विचार्य शीलभंगभयाद्वेपमाना कंपमाना सती निषीदति, तदाश्लेषपरिहारार्थं भूमावुपविशति किं कृत्वा ? बाहुभ्यां द्वाभ्यां भुजाभ्यां संगोफं परस्परबाहुसंगुफनं स्तनोपरि मर्कटबंधं कृत्वा ॥ ३५ ॥

अर्थ—तेराजीमती ते वखते एकांतमा रथनेमि साधुने जोइ भयपामी 'कदाचित् आ साधु मारा शीलनो भंग करे' एम विचारी शीलभंगना भयथी वेपमाना=धुजती धुजती=वेसी गइ ते आलिंगन न करी शके तेटला माटे भूमि उपर वेसी गइ केम करीने? पोताना वे बाहुवडे संगोफ=बे बाहुथी परस्पर अदब=वाळीने, अर्थात् स्तन उपर मर्कटबंध करीने-(वेसी गइ.) ॥ ३५ ॥

मू०—अह सोवि रायपुत्तो। समुद्दविजयंगओ ॥ भीयं पवेइयं दठ्ठुं। इमं वक्कमुदाहरे ॥ ३६ ॥

व्या—अथानंतरं सोऽपि राजपुत्रः समुद्रविजयांगजो रथनेमिर्भीतां प्रवेशितां कंपमानां राजीमतीं साध्वीं दृष्ट्वा इदं वाक्यमुदाहरत्. ॥ ३६ ॥

अर्थः—अथ=अनंतर ते पण राजपुत्र, समुद्रविजयनोपुत्र रथनेमि, भयपमीने कंपती राजीमती साध्वीने जोइ आवुं वचन बोल्यो.

---

मू०—रहनेमी अहं भद्दे। सुरूवे चारुभासिणि। ममं भयाहि सुतणू। न ते पीला भविस्सइ ॥ ३७ ॥

व्या—किं वाक्यमुवाचेत्याह—हे भद्रे! हे कल्याणि! अहं रथनेमिरस्मि, मामन्यं कमपि मा जानीहि? हे सुरूपे! सुंदराकारे! हे चारुभाषिणि! हे मधुरवचने! हे सुतनु शोभनशरीरे! कोमलगात्रि! त्वं मां भजस्व? भर्तृत्वेनांगीकुरु? ते तव पीडा दुःखं न भविष्यति, मया सह विषयसुखं भुंक्ष्व ॥ ३७ ॥

अर्थः—शुं वाक्य बोल्यो ते कहे छे-'हे भद्रे! हे कल्याणि! हे सुरूपे! सुंदर आकारवाळी! हे चारुभाषिणि! मधुरवचन बोलनारी! हे सुतनु! कोमलगात्रि! हुं रथनेमिछुं. तुं मने भज=स्वामीतरीके मारोअंगीकार कर. तने पीडा=दुःख थशे नहिं. मारी साथे विषयसुख भोगव. ॥ ३७ ॥

---

मू०—एहि ता भुंजिमो भोए। माणुस्सं खु सुदुल्लहं ॥ भुत्तभोए तओ पच्छा। जिणमग्गं चरिस्समो ॥ ३८ ॥

व्या—हे राजीमति! एहि मम समीपे आगच्छ? तावदावां विषयं भुंजीवहि. हे प्रिये! खु इति निश्चयेन मानुष्यं मनुष्यस्य जन्म सुदुर्लभं वर्त्तते. ततोऽनंतरमावां भुक्तभोगौ भूत्वा पश्चाज्जिनमार्गं जिनोक्तधर्मं चारित्र-

धर्मं मोक्षमार्गं चरिष्यावः पूर्वं हि यदा भोगसुखं भुज्यते, ततश्च दीक्षा गृह्यते, तदा भुक्तभोगत्वेन पुनर्भोगसुखेषु मनो न स्यात् तस्मात्पूर्वमधुना यथेच्छं भोगसुखं भोक्तव्यमिति भाव ॥ ३८ ॥

अर्थ —हे राजीमती! मारी समीपे आव. आपण बन्ने विषयभोग करीए हे प्रिये! खलु=निश्चये मनुष्य=मानुष्य जन्म अति दुर्लभ छे पछी आपणे भोगभोगवीने पाछा जिनमार्ग=जिनोक्त चारित्रधर्म=आचरशु जो प्रथम भोग भोगवीने पछी दीक्षा गृहण कराय तो भोग भोगवी लीधा होवाथी फरी भोगनी इच्छा न थाय=भोगसुखमा मन न जाय=माटे पहेला तो हमणा आपणे यथेच्छ भोगसुख भोगवीये ३८ ॥

मू०—दट्ठूण रहनेमिं तं। भग्गजोयं पराइयं ॥ राइमई असंभंता। अप्पाणं संवरे तहिं ॥ ३९ ॥

व्या—तदा राजीमत्यसंभ्राता सती, निर्भया सती, तया ज्ञातमहं बलात्कारेणापि शीलं रक्षयिष्यामीति निश्चित्याऽत्रस्तासत्यात्मानं शरीरं वस्त्रे संवृणोत्याच्छादयति, गुहामध्यमेव स्थिता सतीति शेष., किं कृत्वा? रथनेमिं भग्नयोगं दृष्ट्वा, भग्नो नष्टो योगः संयमोत्साहो यस्य स भग्नयोगस्तं पराजितं स्त्रीपरीषहेण पराभूतं रथनेमिं ज्ञात्वा ॥ ३९ ॥

अर्थ —त्यारे राजीमती जराय पण संभ्रम न पामता निर्भय बनीने, एटले तेणीना मनमा निश्चय थइ गयो के. बलात्कारथी पण हु मारा शीळनु रक्षण करवा समर्थछु=तेथी त्रास त्यजीने पोताना शरीरने वस्त्रो वडे, गुफामाज रही उभी ढाकवालागी केम करीने? रथनेमिने भग्नयोग जोइने; अर्थात्–जेनो योग=संयमोत्साह नष्ट थयोछे एटले स्त्रीपरीषहवडे पराभूत थयेला रथनेमिने जाणीने

मू०—अह सा रायवरकन्ना । सुट्ठिया नियमव्वए ॥ जाइ कुलं च सीलं च । रक्खमाणी तयं वए ॥ ४० ॥

व्या०—अथानंतर भग्नयोगस्य रथनेमेदर्शनानंतरं सा राजवरकन्या राजीमती साध्वी तदा वदति, कीदृशी सा? नियमव्रते सुस्थिता, नियमे शौचसंतोपस्वाध्यायतपोलक्षणे स्थिरा. तथा व्रते पंचमहाव्रतलक्षणे स्थिरा. पुनः सा किं कुर्वाणा? जातिंकुलं शीलं तपश्च प्रति संरक्षमाणा. तत्र मातुर्वंशो जातिः, पितुर्वंशः कुलमुच्यते, तयोरुभयोरपि नैर्मल्यं विदधतीत्यर्थः. ॥ ४० ॥

अर्थः—अथ=भग्नयोग रथनेमिने जोइने ते राजवरकन्या राजीमती पोताना नियम एटले शौच, संतोप, स्वाध्याय, तप आदिकमां सुस्थित=दृढतावाळी तथा पंचमहाव्रतमां पण स्थिरतायुक्त, तेमज पोतानी जाति=मातृवंश, कुल=पितृवंश, शीळ तथा तपःनुं संरक्षण करती ए साध्वी, पोताना उभयकुळनी निर्मळता जाळवीने ते रथनेमि प्रति बोली. ॥ ४० ॥

---

मू०—जइसि रूवेण वेसमणो । ललिएणं नलकूबरो ॥ तहावि ते न इच्छामि । जइसि सक्खं पुरंदरो ॥ ४१ ॥

व्या०—भो रथनेमे! यदि त्वं रूपेण वैश्रमणो धनदोऽसि, यदि पुनर्ललितेन मनोहरलावण्यविलासेन नलकूबरो देवविशेषोऽसि, पुनर्यदि हे रथनेमे! त्वं साक्षात्प्रत्यक्षं पुरंदरोऽसि, इंद्रावतारोऽसि, तथाप्यहं त्वां नेच्छामि, भोगार्थं नाभिलपामि. ॥ ४१ ॥

अर्थः—हे रथनेमि! यदि तुं रूपमां वैश्रमण=धनदसमान हो, कदाच ललित=मनोहरलावण्यविलासादिकमां तुं नलकूबर तुल्य हो, वळी हे रथनेमे! भले तुं साक्षात् प्रत्यक्ष इंद्रनो अवतार हो; तथापि हुं तने इच्छती नथी-तारी साथे भोग भोगववा

सर्वथा इ अभिलाष राखती नथी ॥ ४१ ॥

मू०— पक्खंदे जलियं जोइं । धूमकेउं दुरासयं ॥ न इच्छंति वंतयं भोत्तुं । कुले जाया अगंधणे ॥ ४२ ॥

व्या—हे रथनेमे ! अगंधने कुले जाता उत्पन्ना , अर्थादगंधकुलोत्पन्ना सर्पावान्तं विषं भोक्तुं, पुनः पश्चाद् गृहीतुं नेच्छन्ति न वाछन्ति ज्वलन्धूमकेतोरग्नेर्ज्योतिर्ज्वालां प्रस्कन्देदिति प्रस्कन्देयुः, प्राकृतत्वाद्बहुवचने एकवचनं अगंधनजातीयाः सर्पा ज्वलदग्निज्वालां प्रविशेयु , न तूद्गीर्णं विषं पश्चाद् गृह्णन्ति कीदृशं धूमकेतोर्ज्योति ? दुरासदं दुस्सहमित्यर्थ ॥ ४२ ।

अर्थ —हे रथनेमे ! अगंधन नामना कुळमां उत्पन्न थयेला सर्पो,पोते वमेला विषने पाछुं खावा इच्छता नथी, पण प्रज्वलित धूमकेतु=अग्निना दुरासद=असह्य ज्योति =ज्वाळामां प्रवेश करेछे ( प्राकृतमां बहुवचनस्थाने एक वचन प्रयोग थाय छे. ) अगंधन जातिना सर्प बळता अग्निनी ज्वाळामां प्रवेश करे पण पोते दंश करतां नाखेलुं विष पाछुं सर्वथा ग्रहण नथी करता. ॥ ४२ ॥

मू०—धिगत्थु ते जसोकामी । जो तं जीवियकारणा ॥ वंतं इच्छसि आवेउं । सेयं ते मरणं भवे ॥ ४३ ॥

व्या—हे अयशः कामिन् ! हे अकीर्तिवाछक ! अथवा हे अयशः ! अकीर्ते ! हे कामिन् ! त्वा धिगस्तु तव जीवितव्यं धिगित्यर्थ. यस्त्वमसंयमजीवितव्यकारणाद्वान्तं वदनाधिस्रुतमाहारं पुनरापातुं भोक्तुमिच्छसि, दीक्षां गृहीत्वा भोगांस्त्यक्त्वा पुनर्भोगान् भोक्तुमिच्छसि अतः कारणात्ते तवाऽस्मादसंयमजीवितव्यात् पंडितमरणेन मरणं श्रेयः कल्याणकारकं भवेत्, न पुनस्तव भोगाभिलाषः श्रेयस्कर इति भावः ॥ ४३ ॥

अर्थः—हे अयश=कामिन् ! अपकीर्त्तिने चाहनार ! अथवा हे अयशः=अकीर्त्तिवाला कामिन् ! तने धिकार हो. तारुं जीववुं धिकछे. जे तुं संयम रहित जीववा कारणे वमनकरेल=मुखमांथी नीकळेल=आहारने फरी पीवाने इच्छे छे ? अर्थात्–दीक्षा लइ भोग त्यजीने पाछो भोग भोगववानी वांछना करेछे, ते कारणथी तारा आ असंयम जीववाना करता पंडित मरणथी मरवुं श्रेयः=तने कल्याणकारक थशे, आ भोगाभिलाप सर्वथा श्रेयस्कर नथी थवानो. ॥ ४३ ॥

मू०— अहं च भोगरायस्स । तं चासि अंधवण्हिणो ॥ मा कुले गंधणा होमो । संजमं निहुओ चर ॥ ४४ ॥

व्या०—राजीमती वदति, हे रथनेमे ! अहं भोगराजस्योग्रसेनभूपस्य पुत्र्यस्मि, च पुनस्त्वमंधकवृष्णेः समुद्रविजयस्य पुत्रोऽसि, तस्मादावां गंधनो गंधनकुलोत्पन्नौ सर्पौ माऽभूवमस्वाव. यतो हि अगंधनकुलोत्पन्नः सर्पो वांतं विषं पश्चाद गृह्णाति, तद्वदावाभ्यां वांता भोगाः पुनर्न वांछनीयाः, यतो हि सर्पा द्विविधाः, अगन्धनकुलोद्भवा गंधनकुलोद्भवाश्च. यदा हि कस्यचित्पुरुषस्य सर्पो लगति, तदा मंत्रवादिनोऽग्निं ज्वालयित्वा मंत्रेण सर्पा नाकर्षन्ति, तत्र च गंधनकुलोद्भवाः स्वविषं पश्चाद् गृह्णन्ति, अगंधनकुलोद्भवास्त्वग्नौ ज्वलंति, न पुनर्वांतं विषं पश्चाद् गृह्णंति, तस्मादावामगंधनकुलोत्पन्नसर्पतुल्यौ भवाव इति भावः तस्मात्त्वमिदानीं संयमे चारित्रे निभृतो निश्चलः सन् चर ? साधुमार्गे विचरेत्यर्थः. ॥ ४४ ॥

अर्थः—राजीमती कहेछे–हे रथनेमे ! हुं भोगराज=उग्रसेन राजानी पुत्रीछुं. अने तुं अंधकवृष्णिनाकुळमां जन्मेलो समुद्रविजयनोपुत्रछो. तेथी आपणे आपणा कुळमां गंधन जातिना सर्पसमान थवुं न जोइए. सर्प, गंधन तथा अगंधन एम बे जातना कुळमां उत्पन्न-

थयेला होय छे ज्यारे कोइने सर्प डसे अने कोइ विषवैद्य=गारुडी=मंत्रवादी पासे जाय त्यारे ते वादी अग्नि प्रज्वलित करीनमंत्रथी सर्पनु आकर्षण करे३ ते वखत जो ते करडनार सर्प गंधन कुलोत्पन्न होय तो पोतानु विष पाछु खेंचीलीय कारणके जो विष चूसी न लीय तो वादी तेने अग्निमा फेंके, ए भयथी विष पाछु आकर्षीलीये पण जो तेसर्प अगंधन कुलोत्पन्न होय तो अग्निज्वाळामा फेंकानु कबुल करे पण पोते वमन करलु विष सर्वथा पाछु न चूसे तेमज हे रथनेमे ! आपण बन्नेय वमन करेला भोगोनी हवे फरी वांछना नज कराय, माटे तु हवे संयम=चारित्र=नविषये निभृत=निश्चल रहीने साधुमार्गने विषये विचर ॥ ४४ ॥

मू०—जइ त काहिसि भाव । जा जा दिच्छसि नारीओ ॥ वायाविद्धोव्व हठो । अट्ठिअप्पा भविस्ससि ॥४५॥

व्या—हे मुने ! यदि त्व भाव भोगाभिलाष करिष्यसि, यां या नारी द्रक्ष्यसि, अथवा या सुरूपा नारी दृष्ट्वा भोगाभिलाष करिष्यसि, तदा त्वमस्थिरात्माऽस्थिरचित्तो भविष्यसि क इव ? वाताविद्धो हठ इव, हठो वनस्पतिविशेष शेवाल , यथा पानीयोपरि शेवालो वातेन प्रेरितोऽस्थिरो भवति, तथा त्वमप्यतिरूपवती कामिनी दृष्ट्वा कामाभिलाषी सन्नस्थिरचित्तो भविष्यसि ॥ ४५ ॥

अर्थ —हे मुने ! जो कदाच तु भाव=भोगाभिलाष करीश अने जे जे नारीने देखीश, अर्थात् जे जे सुरुप स्त्रीने जोइ भोगाभिलाष करीश त्यारे तु अस्थिरात्मा=अस्थिर चित्त बनीश केनी पेठे ? वाताविद्धहठनी पेठे, एटले हठ=पाणी उपरनो शेवाळ=जेम पवनथी प्रेरित थता अस्थिर थायछे तेम तु पण कोइ अतिरूपवती कामिनीने जोइने कामाभिलाषथी अस्थिरचित्त थइश ॥ ४५ ॥

मू०—गोवालो भंडपालो वा । जहा तद्दव्वनिस्सरो ॥ एव अणिस्सरो तपि । सामन्नस्स भविस्ससि. ॥ ४६ ॥

व्या—हे मुने ! तथा त्वमपि श्रामण्यस्य साधुधर्मस्यानीश्वरो भविष्यसि, भोगाभिलापकरणेन संयमफल-
स्याऽभोक्ता भविष्यसि. क इव ? गोपाल इव, वाऽथवा भांडपाल इव. गाः पालयतीति गोपालो गोरक्षकः, उदर-
पूरणार्थं परकीयगोचारकः. पुनर्भाण्डानि परकीयक्रयाणकवस्तूनि भाटकादिना पालयतीति भांडपालकः, गोपालो
गवां स्वामी न भवति, तद्रक्षणादुदरपूर्तिमात्रफलभाक् स्यात्, न तु गवां स्वामित्वफलभाक्. तथा पुनर्भांडपालः
क्रयाणकाधिपेन क्रयाणकरक्षार्थं रक्षितः पुरुषः क्रयाणकानामीश्वरत्वफलभाग् न भवति, उदरपूर्तिमात्रफलभागेव
भवति. ईश्वरत्वफलभाक् त्वपर एव. तथा त्वमपि श्रामण्यवेषधारकत्वेन द्रव्यधर्मपालकत्वादुदरपूर्तिफलभाग्
वर्तसे, न तु भावधर्मफलस्य मोक्षस्येश्वरो भविष्यसीति भावः. ॥ ४६ ॥

अर्थः—हे मुने ! जेम कोइ पोताना गुजारा माटे वरत लइ ? पारकी गायो चारनार=गोवाळ गायोनो स्वामी थतो नथी तथा
जेम कोइ भांडपाल=पारकी वेचनानी वस्तुओनी भाटक=पगार लइनेरक्षा करनार=ते क्रयाणक=वस्तुओनो मालिक बनतो नथी किंतु
पोताना उदरभरणमात्र फल पामेछे तेम हे रथनेमि ! तुं पण श्रामण्य=साधुधर्मनो अनीश्वर थइश, भोगाभिलाप करीने संयम फळनो
भोक्ता थइ शकीश नहिं. अर्थात् तुं पण श्रामण्य वेषधारक मात्र होइने द्रव्य धर्मपालक थवाथी मात्र उदरभरण रूप फळ भोगवनारो
थइने वर्त्तीश पण कंइ भाव धर्मना फल मोक्षनो इश्वर=स्वामी सर्वथा थइ शकवानो नथी. ॥ ४६ ॥

---

मू०—कोहं माणं निगिह्णित्ता । मायं लोभं च सव्वसो । इंदियाइं वसे काउं । अप्पाणं उवसंहरे ॥ ४७ ॥

मू०—तीसे सो वयणं सुच्चा । संजयाए सुभासियं ॥ अंकुसेण जहा नागो धम्मे संपडिवाइओ ॥ ४८ ॥ युग्मं ॥

व्या—स रथनेमिरिन्द्रियाणि वशीकृत्यात्मानमुपसंहरति स्थिरं करोति, विषयेभ्यो निवारयति किं कृत्वा ? क्रोधं मानं मायां च पुनः सर्वथा लोभं निगृह्याऽत्यन्तं जित्वा एवं रथनेमिरात्मानं धर्मे दृढं चकार. एतदेवोक्तं दृष्टान्तेन दृढयति—तस्या राजीमत्याः संयत्याः साध्व्याः सुभाषितेन स रथनेमिः पूर्वं धर्माद् भ्रष्टो धर्मे सम्प्रतिपातितो धर्म्ये मार्गे स्थापितः केन क इव ? अङ्कुशेन नाग इव, यथाङ्कुशेन नागो हस्ती मार्गाद् भ्रष्टो मार्गे स्थाप्यते, तथा रथनेमिरपि ॥ ४८ ॥

अर्थ —बे गाथानो साथे अर्थ दर्शावाय छे-ते रथनेमि, इंद्रियोने वश करीने पोताना आत्माने उपसंहरे छे=स्थिर करेछे विषयोथी निवारेछे केम करीने ? क्रोध, मान, माया तथा सर्व प्रकारना लोभने निग्रहीने, अर्थात् अत्यंत जीतीने एवी रीते रथनेमिए आत्माने धर्मना विषये दृढ कर्यो एज दृष्टांतथी दृढ करेछे-ते संयमवती राजीमती साध्वीना सुभाषितवडें, जे रथनेमि प्रथम धर्मथी भ्रष्ट हतो ते फरी धर्ममां सम्प्रतिपातित=धर्ममार्गमा स्थापित थयो केनी पेठे ? जेम अङ्कुशवडे मार्गथी भ्रष्ट थतो हाथी, मार्गे लेवाय तेम रथनेमि पण धर्म्यमार्ग प्रति वळ्यो ॥ ४७–४८ ॥

मू०—मणगुत्तो वयगुत्तो । कायगुत्तो जिइंदिओ ॥ सामन्नं निच्चलं फासे । जावज्जीवं दढव्वए ॥ ४९ ॥

व्या—यदा स साधुमार्गे स्थिरोऽभूत्तदा कीदृशोऽभूदित्याह—मनसा गुप्तो मनोगुप्तः तथा वचसा गुप्तो वचोगुप्तो गुप्तवाक् तथा पुनः कायेन गुप्तः कायगुप्तो गुप्तकायः, इति गुप्तित्रयसहितः पुनः कीदृशः ? जितेंद्रियो वशीकृतेंद्रियः, एतादृशो रथनेमिर्यावज्जीवं दृढव्रतः सन् श्रामण्यं चारित्रधर्मं निश्चलं यथास्यात्तथा स्पृशति, सम्यक्

क्रियानुष्ठानेन पालयंति. ॥ ४९ ॥ त्यारे केवा थया ? ते कहेछे–मनवडे गुप्त=मनो गुप्त तथा वचनवडे गुप्त=
अर्थः—ज्यारे ते रथनेमि साधुमार्गमां स्थिर थया वळी जितेंद्रिय=वश करेलछे इंद्रियो जेणे एवा थया. आवा
वचोगुप्त. तेमज कायवडे गुप्त=कायगुप्त; एम त्रणे गुप्तिथी संयुक्त थया; पालन करवा लाग्या. ॥ ४९ ॥
रथनेमि जीवितपर्यंत दृढव्रत रही श्रामण्य=चारित्र्य धर्मने निश्चलपणे सम्यक् क्रियानुष्ठानवडे

मू०—उग्ग तवं चरित्ताणं । जाया दुन्निवि केवली ॥ सव्वं कम्मं खवित्ताणं । सिद्धिंपत्ता अणुत्तरं ॥ ५० ॥

व्या—अनुक्रमेण तौ द्वावपि राजीमतीरथनेमी केवलिनौ जातौ. किं कृत्वा ? उग्रमन्यैः कर्तुमशक्यं तपश्चरित्वा
तपः कृत्वा, अनुक्रमेण च सर्वाणि कर्माणि क्षपयित्वा, पुनस्तावनुत्तरां सर्वोत्कृष्टां सिद्धिं मोक्षगतिं प्राप्तौ. ॥५०॥
अर्थः—अनुक्रमें ते बेय पण=राजीमती तथा रथनेमि केवली=केवळ ज्ञानवाळां=थयां. केम करीने ? उग्र=अन्यथी न थइ शके
तेवुं तपः आचरण करीने, वळी अनुक्रमे सर्व कर्मोने खपावीने ते बन्ने अनुत्तर=सर्वोत्कृष्ट सिद्धिने पाम्यां, अर्थात् मोक्षे गयां. ॥५०॥

मू०—एवं करंति संबुद्धा । पंडिया पवियक्खणा ॥ विणियट्टंति भोगेसु । जहा से पुरिसुत्तमुत्तिबेमि ॥ ५१ ॥

व्या—पंडितास्तत्वमतियुक्ताः, प्रकर्षेण विचक्षणा विवेकिनः पुरुषाः प्रतिबुद्धाः संतः एवं कुर्वंति, किं कुर्वंती-
त्याह–भोगेभ्यो विशेषेण निवर्तंते, कथंचिच्चेतसि विकारे समुत्पन्नेऽपि पुनः कस्यचिद्धर्मात्मनः पुरुषस्य धर्मोपदेश-
धारणेन चित्तं निरुंध्य भोगेभ्यो निवर्तंते. क इव ? यथा स रथनेमिः पुरुषोत्तमः पूर्वं चंचलचित्तो भूत्वा पुनर्धर्मोप
देशाद्धर्मे स्थिरचित्तो बभूव. तथान्यैरपि निश्चलचित्तैर्भवितव्यमिति, न तु चंचलचित्तेन भाव्यमित्यहं ब्रवीमीति

श्रीसुधर्मास्वामी जंबूस्वामिनमाह—हे जंबू! अहं भगवद्वचसेति ब्रवीमि ॥ ५१ ॥

इति रथनेमीय द्वाविंशतितममध्ययन संपूर्ण २२

इतिश्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणि विरचितायां द्वाविंशतितमस्याध्ययनस्यार्थ संपूर्ण ॥ श्रीरस्तु ॥

अर्थ —पंडितो=तत्त्वप्रतियुक्त, तथा प्रकर्षे करी विचक्षण विवेकी पुरुषो प्रतिबुद्ध थइने एमज करेछे शु करेछे? ते कहेछे—भोगोथी विशेषपणे निवृत्त थाय छे कदाच कोइ प्रकारनो चित्तमा विकार उत्पन्न थाय तो पण पुनः=फरीने पाछा कोइ धर्मात्मा पुरुषना धर्मोपदेशथी चित्तने निरुद्ध करीने विवेक पूर्वक भोगोथी निवृत्त थायछे केनी पेठे? जेम रथनेमि पुरुषोत्तम पूर्वमां चंचळ चित्तवाळा थइने पण पाछा राजीमती कृत धर्मोपदेशथी धर्मविषये स्थिरचित्त थया तेमीज रीतें अन्य पुरुषोए पण निश्चलचित्तवाळा थवु, चंचळचित्तवाळा सर्वथा न थवु, 'एम हु बोलु छु'=आ छेल्लु वाक्य श्रीसुधर्मस्वामी जंबूस्वामी प्रति बोल्या के—'हे जंबू! हु आ सघळु भगवद् वचनथी बोलु छु ॥ ५१ ॥ इति रथनेमीय नामनु बावीशमु अध्ययन पूर्ण थयु

इति श्रीमान् लक्ष्मीकीर्तिगणिना शिष्यलक्ष्मीवल्लभसूरि विरचित श्रीमदुत्तराध्ययनी सूत्रार्थदीपिका नामनी टीकामा बावीशमा रथनेमीय नामक अध्ययननो अर्थ संपूर्ण थयो

## ॥ अथ त्रयोविंशतितममध्ययनं प्रारभ्यते ॥

द्वाविंशतितमेऽध्ययने उत्पन्नविश्रोतसि केनापि रथनेमिवद्रतिश्चरणे विधेयेति कथितं. अथ त्रयोविंशतितमेऽध्ययने ज्ञानिना परेषामपि चित्ते सशयं ज्ञात्वा संशयो दूरीकर्तव्यः केशिगौतमवदित्याह—' जिणे पासित्ति नामेणं ' इत्यस्यां गाथायां कथितोऽयं पार्श्वनामा तीर्थकरः, कस्मिन् भवे चानेन तीर्थंकरनामकर्म निबद्धमिति सकौतुकश्रोतृवैराग्योत्पादनार्थं पार्श्वनाथचरित्रमुच्यते--

अर्थः—-बावीसमा अध्ययनमां 'कोइ पण मनुष्ये उत्पन्न थयेला उंचा प्रकारना आगमज्ञान वाळा सदाचरणमां रथनेमिनी पेठे प्रेम धरवो' एम कह्युं. हवे त्रेवीसमा अध्ययनमां 'ज्ञानीए बीजाना पण चित्तमां संशय जाणी लइ ते संशय केशी अने गौतमनी पेठे दूर करवो' एम कहेछे. 'जिणे पासित्ति नामेणं' ए आ गाथमां पार्श्वनाथ नामना तीर्थंकरनुं निरुपण कर्युं छे. 'कया जन्ममां आ पार्श्वनाथे पोतानुं तीर्थंकर एवुं नामकर्म बांध्युं ?' ए सांभळवाना कौतुकवाळा श्रोताना वैराग्यने उत्पन्न करवा माटे पार्श्वनाथनुं चरित्र कहेवामां आवेछे.–

इहेव जंबूद्वीपे भरते क्षेत्रे पोतनपुरे नगरेऽरविंदो नाम राजा, तस्य विश्वभूतिर्नामा पुरोहितः, स श्रावकोऽस्ति, तस्य द्वौ पुत्रौ, कमठो मरुभूतिश्च. तयोः क्रमेण भार्या वरुणा वसुंधरा च. तयोः कमठमरुभूत्योः शिरसि गृहकार्यभारं विन्यस्य स्वयं धर्मं कुर्वाणः क्रमेण कालं कृत्वा विश्वभूतिर्देवलोकं गतः. तद्भार्याऽनुद्धरी विशेषतपःकरणेन

शोषितशरीरा मृता. कमठोऽपि कृतमातृपितृप्रेतकार्यं पुरोहितो जात मरुभूतिरपि प्रायो ब्रह्मचारिकृत्योद्यत सपन्नः तस्य भार्या मनोहरा, तस्याश्च यौवनोद्भेद दृष्ट्वा कमठस्य चित्त चलित, ता सविकारलोचनाभ्या स पश्यति सापि कामविरह्ममसहती त सविकार पश्यति उभयोर्भृश रागोल्लासेऽनाचारप्रवृत्तिर्जाता, मरुभूतिनापि सामा न्यतो ज्ञाता. विशेषज्ञानाय तस्या कमठस्य च पुरोऽह ग्रामातर यास्यामीत्युक्त्वा निजमदिराद्बहिर्गत्वा सध्यासमये कार्पटिकरूप कृत्वा स्वरभेदेन कमठमस्येव बभाण

अर्थ —आ जबूद्वीपमां आवेला भरतखडनेविषे पोतनपुर नामना नगरमा अरविंद नामनो राजा हतो तेनो विश्वभूति नामनो पुरोहित हतो ते श्रावक हतो तेना कमठ अने मरुभूति नामना बे पुत्रो हता तेओनी अनुक्रमे वरुणा अने वसुधरा नामनी स्त्रीओ हती. ते कमठ अने मरुभूतिना मस्तक पर घरना कामकाजनो बोजो नाखी, पोते धर्मनु आचरण करता समय आव्ये मरण पामी विश्वभूति देवलोकमा गयो अनुद्धरा नामनी तेनी स्त्री विशेष तप करी शरीरने क्षीण थता मरण पामी कमठ पण माता तथा पितानी उत्तरक्रियाने पूर्ण करी पुरोहित थयो मरुभूति पण प्रायश' ब्रह्मचारीना कृत्यमा तत्पर थयो तेनी स्त्री मनोहर हती तेने युवान जोइ कमठनु चित्त चळ्यु ते तेने विकारयुक्त नेत्रोवडे जोतो हतो. ते स्त्री पण कामने लीधे वियोग दु'खने सहन नहि करता तेने मनना विकारवाळी थइ जोती हती बन्नेनो प्रेमरग अत्यत उछळता तेओनी दुराचारमा प्रवृत्ति थइ मरुभूतिए पण ए वात साधारणपणाथी जाणी लीधी विशेष जाणवा माटे तेनी अने कमठनी पासे 'हु बीजे गाम जाउछु' एम कही पोताना घर-मांथी बहार नीकळी साजे कापडी साधुनो वेष लइ स्वर बदलावी मरुभूतिए कमठने आ प्रमाणे कह्यु —

हे महानुभाव ! निराधारस्य मम शीतत्राणाय किंचिन्निवासस्थानं देहि ? अविज्ञातपरमार्थेन कमठेन भणि-
तमहो ! कार्पटिक ! अत्र चतुर्हस्तमध्ये स्वच्छंदं निवस ? ततस्तत्र रात्रौ स्थितो मरुभूतिस्तयोः सर्वमनाचारस्वरू-
पमालोक्येर्ष्यापरवशो जातः. परं लोकापवादभीरुत्वान्न तयोः प्रतीकारं चकार. प्रभाते च राजांतिके गत्वा सर्वं
तयोः स्वरूपं यथास्थितमाख्यातवान्. राज्ञा च कुपितेन समादिष्टाः स्वपुरुषाः, तैर्डिंडिमास्फालनपूर्वं गलारोपितश-
रावमालः खरारूढः कमठः सर्वतो नगरे भ्रामितः, भ्रातृजायाभोगकार्यमिति जनानां पुरो निर्घोषं कृत्वा स नग-
रान्निष्कासितः. ततः संजातामर्षः कमठोऽपि समुत्पन्नवैराग्यो गृहीतपरिव्राजकलिंगो दुष्करं तपः कर्तुं लग्नः, तं
च वृत्तांतं ज्ञात्वा मरुभूतिः संजातपश्चात्तापः स्वापराधक्षामणाय तस्यांतिके गत्वा पादयोः पपात. कमठोऽपि त-
दानीं समुत्पन्नपूर्ववैरोल्लासेन मरुभूतेर्मूर्ध्न उपरि महाशिलां पातितवान्. ततो मरुभूतिस्तस्याः प्रहारेणारटन् कालं
कृत्वा विंध्याचले बहुयूथाधिपतिः करी समुत्पन्नः. इतश्चारविंदराजा कदाचिच्छरत्काले सांतःपुरः प्रासादोपरि
स्थितः क्रीडन् शरदभ्रं सुस्निग्धं प्रच्छादितनभःस्थलं मनोहरं ददर्श. पुनस्तत्क्षणादेव वायुना विलीनं तदभ्रं पश्यन्
दृष्टांतावष्टंभेन सर्वेषां भावानां क्षणभंगुरतां भावयन् समुत्पन्नावधिज्ञानः परिजनेन ध्रियमाणोऽपि दत्तनिजपुत्रारा-
ज्यः स प्रव्रजितः. अन्यदा स राजर्षिर्विहरन् सागरदत्तसार्थवाहेन समं सम्मेतशिखरे चैत्यवंदनार्थं प्रस्थितः सा-
गरदत्तसार्थवाहेन पृष्टं भगवन् ! क गमिष्यसि ? यतिनोक्तं तीर्थयात्रायां. सार्थवाहेनोक्तं कीदृशो भवतां धर्मः ?
मुनिना कथितो दयादानविनयमूलः सविस्तरस्तस्य धर्मः. तं श्रुत्वा स सार्थवाहः श्रावको जातः, क्रमेण महाटवीं

प्राप्तः, यत्र स मरुभूतिजीव. करी जातोऽस्ति, तत्र महासरोवर दृष्ट्वा तत्तीरे सार्थ उत्तीर्ण , ॥ १ ॥
'हे महाप्रतापी कमठ, मने निराधारने ठंडीथी बचवा माटे काइ रहेवानु स्थान आपो अजाण एवा कमठे कह्यु 'हे कापडी साधु ! आ ओरडामा तारी मरजी मुजब रहे त्यार पछी त्या रात्रिए रहेलो मरुभूति तेओना सघला दुराचारना स्वरूपने जोइ अदेखाइथी परवश बनी गयो, परतु लोकापवादथी भय पामी तेणे तेओनो दुराचार टाळवानो उपाय कर्यो नहि सवारे राजा पासे जइ तेणे तेओनु सघळु स्वरुप जेवु हतु तेवु कही बताव्यु राजाए गुस्से थइ पोताना माणसोने आज्ञा करी. तेओए गळामा राम पात्रनी माळा पहेरावी, गधेडापर बेसाडी, ढोलपीटी, कमठने आखा शहेरमां फेरव्यो, अने 'आ पोतानी भाइनी स्त्रीनो समोग करनारो छे' एम लोकोनी पासे ढढेरो बहार पाडी तेने शहेरमाथी बहारकाढी मूक्यो त्यार पछी कमठने क्रोध उत्पन्न थयो, परतु पाछळथी वैराग्य प्राप्त थता ते साधुना वेषनु ग्रहण करी दुष्कर तप करवा लाग्यो, आ वृत्तात जाणी पश्चात्ताप उत्पन्न थवा मरुभूति पोताना अपराधनी क्षमा मागवा तेनी पासे जइ पगमा पड्यो कमठे पण ते समये आगला वैरनी जागृति थवाथी मरुभूतिना मस्त कपर मोटी शिला नाखी त्यार पछी मरुभूति ते शिलाना प्रहारथी चीसो नाखतो नाखतो मरण पामी विन्ध्याचल पर्वतमा घणा यूथनो अधिपति हाथी थयो आ तरफ अरविंद राजाए कोइ दिवसे शरद् ऋतुमा महेलनी अगाशीमा अतःपुर सहित रही क्रीडा करता जेणे आकाशने ढाकी दीधु हतु एवा अत्यत शोभावाळा मनोहर शरद् ऋतुना वादळाने जोया फरीने तेज क्षणे वायुथी नाश पामता ते वादळाने जोता अने ते दृष्टातनो आश्रय लइ सघळा पदार्थोना क्षणभगुरपणानो विचार करता अरविंद राजाने अवधि ज्ञान उत्पन्न थयु सेवकोए रोकवा छता पण पोताना पुत्रने राज्य आपी ते साधु थयो. कोइ दिवसे ते राजर्षिए विहार करता सागरदत्त

